योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 256 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 11 जुलाई 2021 रविवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

**प्रियवाक्य प्रदानेन सर्वे तुष्यन्ति जन्तवः।
तस्मात तदैव वक्तव्यम वचने का दरिद्रता।।**

**अर्थ - प्रिय वाक्य बोलने से सभी जीव संतुष्ट हो जाते हैं, अतः प्रिय वचन ही बोलने चाहिए। ऐसे वचन बोलने में कंजूसी कैसी।**

### संक्षिप्तवार्ताः

**पुरी ।** अद्यारभ्य द्विदिनपर्यन्तं महाप्रभोः श्री-जगन्नाथस्य नवयौवनवेशः संघटितः । अनवसर पिण्डिकायां अस्य वेशः प्रचलति । अस्मिन् कोरोनाकाले अस्य वेशस्य दर्शनकर्तुं न कोऽपि समर्थो भविष्यति ।

**पिपिलि ।** प्रधानमन्त्रि-आवास योजनायां महादुर्नीतिः । बि जे पि पक्षतः पिपिलि ब्लक सम्मुखे गणधारणा विक्षोभ प्रदर्शनं च ।

**भुवनेश्वरम् ।** पर्युषितान्न-जले (पखाल तोराणि उत्कलभाषा) करोना प्रतिरोधशक्ति अस्ति इति एमस् चिकित्सालय भुवनेश्वर चिकित्साविज्ञानद्वारा प्रमाणीकृतम् ।

**भुवनेश्वरम् ।** कमिशनरेट आरक्षीवाहिनीनां कृते महती सफलता । 7 साइवर चौराः निगृहीताः । तेभ्यः 150 संख्यका दूरभाष यन्त्राणि, 16000 सिमकार्ड स्वायत्तीकृताः ।

**केन्द्रापडा ।** भितरकनिका-डांगमाल-मकर-गवेषणा-केन्द्रपरिसरस्थ जातीय-उद्याने 21 फुट् लम्बपरिमित सर्वबृहत् मकरः परिलक्षितः ।

**कटकम् ।** ओडिशा आदर्श विद्यालय शिक्षका-नियुक्तिप्रक्रियायां एन सि इटि नियमः उलंघनहेतोः उच्च-न्यायालय-खण्डपीठेन समालोचितम् समुत्तरं च याचितम् ।

**अनुगोलम् ।** छेण्डिपदायां बाहालसाहि पञ्चायते करोनामृतकस्य वृद्धस्य परिवारजनाः ग्रामवासिनश्च शवसत्कारकर्तुं न असम्मताः । सर्वशेषे जिल्ला उन्नयन अधिकारिणा सह पञ्चायत कार्यनिर्वाहि अधिकारी , सरपञ्च महोदयाश्च एतन्महनीयकार्यं संपादितवन्तः ।
**नन्दप्रदीप्तकुमारः**

टीकाकरणस्य सुचारु व्यवस्थां तीव्रतापूर्वकं कारयितुं राज्येषु केन्द्रशासितप्रेदेशेषु च 'कोरोणा' इति विषाणुरक्षणाय 'वैक्सीन' इति औषधिकृते

# केन्द्रसर्वकारेण राज्याणां चिकित्सालेभ्योऽधुना यावत् 33 कोटि 'कोरोणा' इति विषाणुरक्षणार्थम् 'वैक्सीन' इति औषधिः प्रदत्ता

## यस्याम् 01.73कोटीति संख्यायामधुनापि शेषाः वर्तन्ते






**नवदेहली।** केन्द्र स्वास्थ्यमन्त्रालयेनोक्तम्, राज्यचिकित्सालयेषु तथा व्यक्तिगत चिकत्सालयेषु 01.73 कोटि 'वैक्सीन' इति संख्यायामधुनापि शेषाः सन्ति। केन्द्रसर्वकारेण राज्येभ्यः केन्द्रशासित प्रदेशेभ्यश्च अधुना यावत् 38.18 कोटि 'वैक्सीन' इति संख्यायां 'कोरोणा' इति विषाणु रक्षणार्थं 'वैक्सीन' इति टीका-औषधिं प्रदत्ताः। शीघ्रमेव 23.80 कोटि संख्यायाम् 'कोरोणा रक्षणार्थं वैक्सीन' इति औषधिः समुपलब्धा कारिष्यते। देशे 'कोरोणा' इति विषाणुरक्षणार्थं टीककरणक्षेत्रे दिं0-21जून इति मासतो नवीनचरणस्य शुभारम्भं जातम्। टीकाकरणस्य सुचारु व्यवस्थां तीव्रतापूर्वकं कारयितुं राज्येषु केन्द्रशासितप्रेदेशेषु च 'कोरोणा' इति विषाणुरक्षणाय 'वैक्सीन' इति औषधिकृते अधुना सर्वत्र जागरूकता भविष्यति।



### छद्ममुखं सामाजिक दूरत्वं च विस्मृतानां जनानां चित्रेसु प्रधानमंत्री मोदी आक्रोशितः

**प्रयागराजः। वार्ताहरः।** कोरोनाकालस्य द्वितीय तरंगस्य शिथिलतायांअनेकस्थलेसुसम्मर्दः सम्वर्धितः।गतदिवसेषुअनेकस्थलानांचित्राणि समक्षेसमागतानि यस्मिन् जनाः सामाजिकंदूरत्वं, छद्ममुखधारणं च नैवकुर्वन्तिस्म।इमानिचित्राणि दृष्ट्वानरेन्द्रमोदी रूष्टः अभवत। सः गतगुरूवासरेसमायोजितायांमंत्रिपरिषदः गोष्ठ्यांअस्य चर्चाचालितः तेनउक्तं यत् अनावधानतायै न किमपिस्थानंभवेत। एकाऽपि त्रुट्याः दूरगामीपरिणामः भविष्यतिइयं च अनवधानतामहामार्याः विरूद्धे युद्धं निर्बलंकर्त्तुं शक्यते।





प्रयागराज। स्वास्थ्य केन्द्रे उत्तर मध्य रेलवे सूबेदारगंजे चालयतिस्म प्रतिरोधनं अभियानम्

### राष्ट्रे प्राणवायोः दौर्लभ्यपरिहाराय 1500 नूतन - प्राणवायुत्पादक-केन्द्राणि स्थाप्यन्ते - प्रधानमन्त्री

नवदेहली राष्ट्रे कोविडस्य स्थितिम् अवलोकयितुं प्रधानमन्त्रिणः नेतृत्वे उन्नतस्तरयोगः समभवत। तृतीयतरङ्गसाध्यतां परिगणय्य कोविडस्य इदानीन्तना अवस्था, तथा औषधीयप्राणवायोः लभ्यता च योगे चर्चिता। प्रधानमन्त्रिणः रक्षाधनसाहाय्येन राष्ट्रे सर्वत्र 1500 पि एस् ए प्राणवायुरुत्पादककेन्द्राणि सज्जीकुर्वन् अस्ति इति योगे कार्यकर्तारः प्रधानमन्त्रिणं प्रति आवेदितम। एतस्मात् उत्पादककेन्द्रात् 400000 प्राणवायुतल्पस्य कृते आवश्यकः प्राणवायुः वितीरितुं शक्यते। शीघ्रातिशीघ्रं पि एस् ए प्राणवायुरत्पादककेन्द्राणि प्रवर्तनयोग्यानि करणीयानि इति प्रधानमन्त्रिणा कार्यकर्तारं प्रति निर्देशो दत्तः।




## अगाधप्लवनवापी दुबाय् देशे उद्घाटिता

**नवदेहली।** विगाहनार्थं विश्वे डीप् डैव् नामिका (अगाधनिमज्जनं )प्रथमा अगाधपुवनवापी दुबाय् देशे उद्घाटिता। दुबाय् अधिकारी शैख् हंदान् बिन् मुहम्मद् बिन् राषिद् अल् मक्तुं महोदयेन डीप् डैव् नामकस्य अगाधपुवनवाप्याः उद्घाटनकर्मं निरवहत। दुबाय् माध्यमसंस्थायाः अध्यक्षः अहम्मद् बिन् मुहम्मद् बिन् राषिद् अल् मक्तुम् अपि कार्यक्रमे उपस्थितः आसीत। नाद् अल् षेबा परिसरे स्थिता डीप् डैव् वाप्यां 60 मीट्ट 'अधिकतया अगाधे अवगाहनं कर्तुं शक्यते। 1.4 कोटि लिट्ट 'मितं जलं संभृतं वर्तते अस्मिन। षट् ओलिम्पिक् वाप्याः तुल्यं भवति डीप् डैं०। नूतन साङ्केतिक-विद्यायुक्त-सुविधा अपि वाप्याम् आविष्कृता अस्ति।

## उत्तरप्रदेशे विकास खण्ड प्रमुख निर्वाचनाय मतगणना समारब्धा

**प्रयागराजः। वार्ताहरः।** उत्तरप्रदेशे विकास खण्डप्रमुख निर्वाचनाय मतगणना समारब्धा। लखीमपुर खीरीइत्यत्र एकं मतं आदाय कलहः। उत्तरप्रदेशे अद्य 476 पदेसु विकासखण्ड प्रमुखस्य निर्वाचनाय मतदानान्तरे मतगणनाचलति, अस्मिन् निर्वाचनेप्रदेशेप्राक् एव 334 विकास खण्डप्रमुखाः निर्विरोधः चयनिताः।



### उत्तरप्रदेशे जनसंख्या नियंत्रणस्य पत्रकं सज्जीभूतम्



**लखनऊ।** उत्तरप्रदेशे जनसंख्या नियंत्रणस्य पत्रकं सज्जीभूतम्। द्वयोः शिशोः अधिकेसति सर्वकारिसेवानैव। विधानं अनुपालने प्रोत्साहनं, प्रोन्नतिः करभुगतानेऽपि शैथिल्यं। सर्वकारि योजनानांलाभः नैवप्राप्स्यते। खाद्यान्नवितरणप्रपत्रे चत्वारतः अधिकाः सदस्याः नैव भविष्यन्ति। स्थानीयेनिकाय पंचायत निर्वाचने प्रतिभागित्वे अवरोधः।

## सम्पादकीयम्

# कारणानां मूले गन्तुं प्रयासो नाभवत्

कोरोना संक्रमणस्य या स्थितिः वर्तते सा संकेतयति यत् द्वितीयस्य तरंगस्य अपाय आकलने महती त्रुटिरभवत्। यतः प्रथमतरंगस्य निस्सारणानन्तरे इयं अवधारणा निर्मिता आसीत् यत् युद्धं विजिवन्तः। इयं त्रुटिः अनेक स्तरेषु संजाता। फरवरी मासे संक्रमणस्य न्यूनतमे स्तरे आगते सत्यपि वैज्ञानिकाः इदम् तु मन्यन्तेस्म यत् कोरोना इदानीं न परिसमाप्तः परंच तत् इयत् भयंकर रूपे समागमिष्यति अस्याभासः न कृतवन्तः। अयं प्रथमः दोषः आसीत्। फरवरी मासस्य अन्तिमे सप्ताहे मार्चे च यदा महाराष्ट्रे कोरोना गभीरायतेस्म तदपि शेषाः प्रान्ताः शिक्षां न गृहीतवन्तः अथ च तं महाराष्ट्रं पर्यन्तं सीमितं मत्वा अवहेलितवन्तः। अयं द्वितीयः दोषः आसीत्। मार्चे यदा कोरोना 11-12 राज्येसु विस्तारितः तदा अपि कारणानां मूले गन्तुं प्रयासो नाभवत्। यथार्थतः कोरोना सदृशा महामार्याः समाधानाय द्विस्तरीया सज्जतायाः आवश्यकता अस्ति। राष्ट्रस्य अन्तर्परिवहनस्य अन्येन विधानेन यथा गृह वायुसेवा, रेलवे, वाहनस्य च यातायात केन्द्रेसु भव्यमानं गमनागमनस्य निरीक्षणस्य व्यवस्था सुनिश्चितेव्या। चेत् कस्यचिद्विधः दोषोऽभवत् तर्हि द्वितीये प्रस्तरे तं सुव्यवस्थितव्येत्।

# 'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी, एष योनिः सर्वस्य प्रभावाप्ययौ हि भूतानाम्'

''एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी।
एष योनिः सर्वस्य प्रभावाप्ययौ हि भूतानाम् ।।

अत्र अयं अभिप्रायः। एतत्पर्यन्तं हि यद्यपि समष्टि व्यष्ट्योः एकरूपत्वम् अभिप्रेतं तथापि तत् स्पष्टं नोक्तं भवति। अतः अन्ययोः अवस्थयोः जीवस्य उपाधिग्रस्तत्वात् तस्य समष्टिरूपेण एकत्वं कुं न शक्यते स्फुटम्। अतः तृतीयावस्थायां कारणीभूताविद्यारूपस्य उपाधेः एकत्वात् अस्याम् उभयोः ऐक्य सम्भवति वक्तुम्। अतः तदुच्यते। तथा च तादृशैक्याभि प्रायेण अयमेव सर्वेश्नरः, सर्वज्ञः, अन्तर्यामी, जगदुत्पत्तिलयकारणं च भवति इति।

तदेव व्याख्याता तृतीया सुषुप्त्यवस्था। तादृशावस्थोपाधिक आत्मा अपि तृतीयः पादः व्याख्यात्। विवृतः च तैः तैः व्याख्यातृभिः। यथासम्यवं विस्तारेण प्रदर्शितश्चास्माभिः। एतासां अवस्थानां विषये श्रीमन्मधुसूदनसरस्वतीस्वामिभिः सिद्धान्तबिन्दुग्रन्थे एवं प्रदर्शनं कृतं यत् 'जीवस्य एते त्रयः अवस्थाविशेषाः।'36 आद्यद्वय सुखदुःखानुभवः। तृतीयावस्थायां प्रज्ञप्तिमात्रम्। व्यावहारिकदशायां जगत्सर्वं विश्नेन अनुभूयते। एवंभूतः विश्वः देहेन्द्रियादिषु प्रविष्टः, इन्द्रियजन्यं ज्ञानम् अनुभवति। यदा निद्राख्यया तामस्या वृत्त्या स्थूलदेहाभिमानः दूरीकृतो भवति तदा सर्वाणि इन्द्रियाणि निर्व्यापारतया स्थितानि, लीनानि भवन्ति। तदा विश्वोऽपि लीनः इत्यच्यते। इयमेव स्वप्नावस्था, यत्र मन एव गजतुरगार्थाकारेण विवर्तते। अविद्यावृत्त्या च ज्ञायते इति केचित्। अविद्यैव शुक्तिरजतादिवत् स्वप्नार्थाकारेण परिणमते, ज्ञायते च अविद्यावृत्त्या इत्यन्ये।

सुषुप्तिरपि अविद्यया एव कृता, किन्तु सुषुप्तौ तमः एवास्ति, व्यवहारो नास्ति। एवं जाग्रत्स्वप्नसुषुप्तिषु भेदसत्त्वात् इयं जाग्रत्, अयं स्वप्नः, इयं सुषुप्तिरिति पृथक् व्यवहारः। लक्षणतो अभिन्ना अपि व्यवहारतो भिन्ना तिस्रः अवस्थाः। सुषुप्त्यवस्थायां जीवः 'सता सच्छब्दवाच्यया प्रकृतया देवतया सम्पन्नो भवति, सङ्गत एकीभूतो भवति।'37 मनसि प्रविष्टं मन आदिसंगर्गकृतं जीवरूपं परित्यज्य स्वं सद्रूपं यत् परमार्थसत्यम् अपीतः अपिगतः भवति। जीवः प्रतिबिम्बरूपः, अन्तःकरणं तस्य उपाधिः। अन्तःकरणरूपोपाधिलयेन जीवस्य स्वस्वरूपप्राप्तिः इत्यर्थः इति। अनेन स्पष्ट प्रतिपत्तिकेन ग्रन्थेन इदं आख्यातं यत् अविद्या एव तिसृषु अवस्थासु अस्ति। परन्तु जाग्रदवस्थायां व्यावहारिकप्रपञ्चेन समं स्वप्नावस्थायां स्वाप्नवस्तुभिः साकं च अस्ति। सुषुप्तौ परं कारणीभूता सा एका अविद्या अस्ति तस्याः कार्यं किमपि नास्ति इति। ततश्च अविद्यामात्रोपाधिकं जीवः प्राज्ञः आत्मनः तृतीयः पाद इति सिद्धं भवति। तुरीयवस्थाः शुद्धः हि आत्मा उपनिषद्भिः सर्वाभिः अपि तात्पर्येण प्रतिपाद्यते इति सर्वेषां नः विदितमेव। अयं हि आत्मा शुद्धः इत्येवं कृत्वा न केनचित् प्रमाणेन समधिगन्तुं शक्यते। स्वप्रकाशत्वात् अपि केनचित् प्रमाणेन अधिगमः निर्णयस्य अस्य आत्मनः न भवितुं अर्हति। यद्यपि एवं सति वेदान्तानाम् आनर्थक्यं प्रसज्यते एव तथापि वेदान्तैः आत्मनि कल्पितानाम् अतद्धर्माणाम् एव निराकरणं केवलं क्रियते न तु आत्मतत्त्वं प्रतिपाद्यते इति अङ्गीकारेण आत्मनः स्वप्रकाशत्वं सिद्धान्तसिद्धम् अनुभवसिद्धमेव वा अस्ति रक्षितं भवति। अत एव 'नेति नेति'38 इत्यादिना सर्वधर्मप्रतिषेधः आत्मनः उपपद्यते। अत एव च आत्मनः परप्रतिषेधगम्यत्वं सिद्धान्तिनः सम्मन्यन्ते। प्रकृतेऽपि आत्मनः अवस्थाधर्मनिषेधेन अस्यैव आत्मनः शुद्धतासिद्धिः। योऽयम् आत्मा इति आत्मनः चतुर्थः पादः इति च अभिधीयते। सोऽयम् अवस्थात्रयविवेकः तन्निषेधः च कूर्चब्राह्मणेऽपि दृष्टः। कूर्चो नाम उच्चस्थानम्। तस्मात् स्थानात् उत्थाय, अर्थात् ज्ञानित्वाभिमानं विसृज्य राजा जलकः शिष्यत्वेन याज्ञवल्क्यम् उपससाद। याज्ञवल्क्यः विश्वतैजसप्राज्ञानुवादेन नेति नेतीत्यादिना सर्वप्रतिष्ठाभूतस्य तुरीयस्य प्रतिपादनम् अकरोत्। आदौ वैश्वानरोपासनार्थाम् इन्द्रश्च इन्द्राणी चेति मिथुनं प्राकल्पयत्। 'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः।'39 ' अथैतद्वामेऽक्षणि पुरुषरूपमेषाऽस्य पत्नी विराट्'40 इत्यादिना। अत्र च इन्धः एव इन्द्रः वैश्वानरः, जाग्रदभिमानी। विराट् एव अन्नं भोग्यत्वात् इति भाष्यकाराः विवृण्वते जाग्रदवस्थायाम् अनुभूतविषया एव अन्नं, भोज्यम् स्वप्नावस्थायाम्। इन्द्राणीन्द्रयोः संस्तावः समागमः हृदयाकाशे एवं मिथुनीभूतः पिण्ड एव तैजस इति व्यवह्रियते। तथा च तेषां स्थूलसूक्ष्मसूक्ष्मतररूपेण आहारा अन्नभेदः 'विश्वस्य जागरिताभिमनिनः तैजसे।' तस्य च स्वप्नाभिमानिनः वाक्यैः स्फुटं भवति। ''एवं विद्वान् क्रमेण सर्वात्मकं प्राणम् आत्मत्वेनोपगतो भवति। तं सर्वात्मानं प्रत्यगात्मन्युपसंहृत्य द्रष्टुर्हि द्रष्टृभावं नेति नेत्यात्मानं तुरीयं प्रतिपद्यते।''41 अर्थात् प्रथमतः ईश्वरत्वमापन्नः, तं पुनः तुरीये शुद्धचैतन्ये उपसंहरति। एवं च जगतः द्रष्टुः (विश्वस्यापि) द्रष्टा, प्रमातुः प्रमाता साक्षी तुरीयः भवति। तथा नेति नेतीति सकल विशेषण निषेधेन निषेधावधितत्त्वभूतं यत् तुरीयं तत् प्राप्नोति इत्यर्थः। एव विजानन् अभयं जन्म मरणादि निमित्तभयशून्यं प्राप्नोति साधकः, यथा जनकः प्राप्तवान्। ततश्च ब्राह्मणेन अनेन शुद्धस्य आत्मनः प्रतिपादनं सम्यक् कृतम् । माण्डूक्योपनिषत् अपि पादत्रयविवरणानन्तरं चतुश्पात्मनः चतुर्थं तुरीयपादं प्रतिपादयति। जाग्रत्-स्वप्न-सुषुप्तिभेदेन विश्व-तैजस-प्राज्ञानां वर्णनं, ततश्च चतुर्थस्य तुरीयात्मनः इति माण्डूक्योपनिषदः प्रतिपादनरीतिः ज्ञायते एव। ''नान्तःप्रज्ञं नब्रहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञज्ञानघनम् नप्रज्ञं नाप्रज्ञम दृष्टम व्यवहार्यमलक्षणम-चिन्त्यमव्यपदेश्य मेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा स विज्ञेयः'' इति। अतः अवस्थात्रयातीतः अवस्थात्रयसाक्षी एकः शुद्धः आत्मा अवश्यम् अङ्गीकार्यः। सः च अवस्थानां कल्पितानां प्रविलापेनन ज्ञायते। इयं या अवस्थारहितावस्था सा एव तुरीयावस्था इति कथ्यते। अस्याः अवस्थात्वं तुरीयत्वं वा पूर्वा अवस्था आदायैव। उक्तं च भाष्यकारैः ''माया सङ्ख्यातुरीयम्'' अत इयम् अवस्था इति व्यवहारमात्रम् न तु अस्याः अवस्थात्वं नापि अनया शुद्धस्य आत्मनः अवस्थावत्वम्। एवञ्च इदं सिद्धं भवति यत् आत्मनः जागरितस्वप्नासुषुप्ति अवस्थाः कल्पिताः। कल्पिनाम् एतासां प्रत्याख्यानेन प्रविलापनेन यत् स्वरूपं नित्यशुद्धबुद्धभुक्तस्वभावं परिशिष्यते तदेव आत्मनः तत्वं ज्ञात्वा एव सर्वः अपि जनः कृतकृत्यः भवति इति।

# आसनेन दृढताऽऽयाति, प्राणायामेन सम्पूर्ण शरीरस्थ धातूनां शोधनमन्तराणां नाशनञ्च

मानवजीवनस्य माहात्म्यं न केवलमन्तः करण विस्तारत्वादेव, अपितु देहसंरचनापि तत्र मुख्यहेतुः। केवलं मानवशरीरे एव प्राणानां, चक्राणां तथान्यविभिन्नयौगिककेन्द्राणामित्थं नैसर्गिक स्थितिर्वर्तते, यैः माध्यमैः मानवाः महामानवाः भवितुं शक्नुवन्ति। आसनेन दृढताऽऽयाति, प्राणायामेन सम्पूर्णशरीरस्थधातूनां शोधनमन्तराणां नाशनञ्च भवति। आसनेन सह प्राणिकविधिसंयोजनार्थं मुद्राणां प्रयोगो भवति। मुदं राति ददातीति मुद्रा इति व्युत्पत्तिः। अर्थात् यस्तु मूलस्वरूपं वर्तते सर्वेषां प्राणिनां तस्य स्पष्टरूपेणानुभवमेव एतासां मुद्राणां मुख्यार्थः। यतोहि निरोधावस्थितचित्तस्य मूलार्थस्त्वयमेवास्ति यत् योऽस्मि तस्यैवाऽऽपरोक्षानुभूतिरिति। मुद् मोदे तु रा दाने जीवात्मनापरमात्मनोः। उभयोरैक्यसंवित्तिर्मुद्रेति परिकीर्तिता। उभयोर्जीवात्मापरमात्मनो ऐक्यसंवित्तिः अखण्डज्ञानेऽवस्थितेः द्योतिका मुद्रेति। मुद्रायाः अभ्यासविषयकस्वरूपतायाम् अधिकारि-जनानाम् अत्यन्तमहत्त्वमस्ति। परमलक्ष्यप्राप्तये साधनचतुष्टयसम्पन्न एवाधिकारी। योगाभ्यासस्यात्यन्तावश्यकानि यानि साधनानि सन्ति तस्मिन् विषये योगरसायनग्रन्थे त्रयोदशात्मके श्लोके स्वामिब्रह्मानन्दैरुक्तम् यत् -

***प्रथमं विषयत्यागो द्वितीयमनुकूलता।***
***तृतीयं गुरुसंयोगश्चतुर्थं चेशचिन्तनम्॥ इति।***

एतेषां चतुर्णां समायोजनमेव पर्याप्तमस्ति योगसिद्धय इति। मुद्राणां प्राधान्यं वर्तते यौगिकक्रियायाम्। यतोहि अत्र मुख्यरूपेण बहिर्विधिनाऽन्तरङ्गेण सह सम्बध्यते। अनादिकालतः सर्वैस्साधकैः यन्त्रतन्त्रमन्त्रादि विभिन्नमार्गेषु मुद्रायास्साहाय्यमधिकृत्येव स्वस्वरूपानुसंधानरूपा लक्ष्यप्राप्तिः क्रियते। कारणमस्ति स्थूलबहिःपक्षस्य अन्तरङ्गसूक्ष्मपक्षेण सह मुद्राणामभावे सम्बन्धस्थापनमसम्भवमिति। हठयोगप्रदीपिकायां मुद्रावर्णनक्रमे प्रारम्भे एव नियोगरूपेणोद्घोषः प्राप्यते यत् - तस्मात्सर्वप्रयत्नेन प्रबोधयितुमीश्वरीम्।
ब्रह्मद्वारमुखे सुप्तां मुद्राभ्यासं समाचरेत्।। इति।

तस्मात् ब्रह्मद्वारमुखे सुप्ताम् ईश्वरीम् प्रबोधयितुं सर्वप्रयत्नेन मुद्राभ्यासं समाचरेत् इत्यन्वयः। अस्तु, शक्तिजागरणात्पूर्वं किमपि न भवितुं शक्यते, यतोहि शक्त्याः स्थूलस्वरूपं रजः शुक्रयोः स्त्रीपुंसोर्देहे स्पष्टरूपेण परिलक्ष्यते। अस्यां मैथुन्या सृष्टयां सर्वेषां जीवानामुत्पत्तिमूले उभयोः तत्त्वयोः विशिष्टसंयोगस्तु प्रथमहेतुः। स्पष्टत्त्वान्न विवेच्यते। योगः अर्थात् समाधिः, इत्यस्य सम्प्रज्ञातावस्थाया अपि प्राप्तिस्तु मानवशरीरस्थ-सारतत्त्वस्य औजरूपेणोर्ध्वगमनादेव संभवति। प्रायस्सर्वेषां जनानां मध्ये शरीर स्थमूलतत्त्वस्य किञ्चिद्रूपेणोर्ध्वगमनन्तु अस्त्येव, एतस्माद् प्रभावादेव शारीरिकमानसिक-ऽऽत्मिकस्तरीयकार्याणां सम्पादनं भवति। परन्तु अदृष्टपरमतत्त्वस्यापरोक्षानुभूत्यर्थं भोगद्वाराणां (अधस्थेन्द्रियाणां मुख्यतः) परिबन्धनं तथा च योगद्वारस्य सुषुम्नामार्गस्योद्घाटनमत्यन्तमपेक्ष्यते। सुषुम्नायाः पर्यायोऽस्ति मध्यमार्गः। मध्ये एव प्रचलतीति मध्यमार्गः। पूर्वमध्यमार्गः पश्चिम मध्यमार्गश्च द्वौ मार्गौ स्तः। पूर्वमध्यमार्गे गुदाद्वार-सींवनीनाडी-उपस्थ-नाभि-हृदय-कण्ठ-भ्रूमध्य-सहस्र-दलपद्मानां च समावेशो भवति। शरीरस्य पृष्ठभागस्याभिधानं पश्चिममध्यमार्ग इति। मुख्यत अग्रनम्रीप्रधानासनादिक्रियासु पश्चमार्गे वायुगतिः, पश्चनम्रीप्रधानासनादिक्रियासु पूर्वमार्गे वायुगतिश्च भवति। सुषुम्नामार्गस्योद्घाटनं विना शक्त्याः पूर्णरूपेणोर्ध्वगमनन्न सम्भवति। अतो यदि तु शिवशक्तिसम्मेलनाय, शिवस्तु ऊर्ध्वमधश्च शक्तिः, तयोर्मेलनाज्जीवस्य मुक्तिः मोक्षाय वा सन्नद्धः तर्हि योगमार्गे मुद्राणामभ्यासाद् नान्योऽस्ति मार्गः। विभिन्नमुद्राणां विभिन्नयौगिकग्रन्थेषु न्यूनाधिक्यरूपेण वर्णनं प्राप्यते। यथा - गोरक्षसंहिताग्रन्थे पञ्चमुद्राणामेव वर्णनं मिलति - मूलबन्धमुद्रा, उड्डीयानमुद्रा, जालन्धरबन्धमुद्रा, महामुद्रा, खेचरीमुद्रा च। यथा शिवसंहितायां तथैव हठयोगप्रदीपिकायामपि दशमुद्राणां वर्णनं वर्तते यथा -

***महामुद्रा महाबन्धो महावेधश्च खेचरी।***
***जालन्धरो मूलबन्धो विपरीतकृतिस्तथा।***
***उड्डयानं चैव वज्रोली दशमं शक्तिचालनम्।***
***इदं हि मुद्रादशकं मुद्राणामुत्तमोत्तमम्॥***

अपि च - महामुद्रा महाबन्धो महावेधश्च खेचरी।
उड्यानं मूलबन्धश्च बन्धो जालन्धराभिः।।
करणी विपरीताख्या वज्रोली शक्तिचालनम्।
इदं हि मुद्रादशकं जरामरणनाशनम्।।

घेरण्डसंहितायां हठयोगप्रदीपिकायाः वर्णितदशमुद्राभिस्सह पञ्चदशान्यमुद्राणामपि वर्णनं प्राप्यते। यथा -

महामुद्रा नभोमुद्रा उड्डीयानं जलन्धरम्।
मूलबन्धं महाबन्धं महावेधश्च खेचरी।
विपरीतकरी योनिर्वज्रोली शक्तिचालनी।
ताडागी माण्डुकीमुद्रा शाम्भवी पञ्चधारणा।
आश्विनी पाशिनी काकी मातङ्गी च भुजङ्गिनी।
पञ्चविंशति मुद्राणि सिद्धदानीह योगिनाम्।।

अन्याः संक्षोभणी-द्रावणी-आकर्षणी-वशी-उन्माद-महांकुशमुद्राणाञ्चापि निर्देशास्तु प्राप्यन्ते। क्वचित्तु खेचरी-भूचरी-अगोचरी-चाचरी-उन्मनीत्यादि नाम्नाऽपि मुद्राणां कथनं प्राप्यते। एतासां सर्वासां मुद्राणां न्यूनाधिक्यरूपेण हठयोगप्रदीपिकायां वर्णितमुद्रास्वन्तर्भावं प्रदर्शयामि। यतोहि सर्वेषु क्रियारूपेषु प्रयोगकाले केन्द्रपरिवर्तनादेव विभिन्नरूपेषु मुद्रायाः स्वरूपाण्यनुभूयन्ते। मुख्यतस्तु दशमुद्रास्वेव सम्पूर्णोद्देश्यप्राप्तिस्सामर्थ्यमस्त्येव, उक्तञ्च- इदं हि मुद्रादशकं मुद्राणामुत्तमोत्तममिति। अन्यासां मुद्राणां कथनन्तु विभिन्नमार्ग-निदर्शन-मात्रमिति। शरीरस्थविभिन्नप्राणानां निश्चितचक्रेण सह विशिष्टसम्बन्धः, यथा तु मूलाधारेणापान स्येत्यादि। विशिष्टत्वादत्र परस्परं संशोधनसामर्थ्यं ज्ञेयम्। इदमेव कारणं वर्तते निश्चितचक्रमभिलक्ष्य मन्त्रजापेन प्राणानां प्रवाहे प्रमन्दताऽयाति। तथैव प्राणायामेन चक्राणां संशोधनं भवति। यथा प्राणचक्राणां परस्परं सम्बन्धः तथैव मुद्राप्युभयेन सह सम्बध्यते, यतोहि मुद्राणां प्रादुर्भावः आसनप्राणायामयोर्मध्ये तथा च बहिरङ्ग प्रत्याहारधारणाद्यऽन्तरङ्गयोर्मध्ये व्यवस्थासम्पादनाय भवति। प्रथमचरणे आसनप्राणायामयोर्मध्ये मुद्राणां प्रयोगः साधकप्रयासेन सम्भवति यथा तु घेरण्डसंहितायां आसनानन्तरं एतासां वर्णनं वर्तते। एतासामभावे स्थिरता लाभो नैव सम्भवम्। परञ्चाग्रिमस्तरे एतासां मुद्राणामाविर्भावो भवति। सहजतायाः महत्त्वं प्रदर्शनाय हठयोगप्रदीपिकायां मुद्राणां वर्णनं प्राणायामानन्तरं प्राप्यते। प्रयोगकाले प्राणायामस्य केवलकुम्भकावस्थायां चित्तव्यापाराभावाद् प्रत्याहारस्यान्तर्भावो ज्ञेयः। हठयोगप्रदीपिकायां त्रिविधप्राणायामस्य एवं द्विविधकुम्भकस्य वर्णनं प्राप्यते। आचार्यैः तत्र कथितम् - प्राणायाम स्त्रिधा प्रोक्तो रेचकपूरककुम्भकः। सहितः केवलश्चेति कुम्भको द्विविधो मतः। वायोः नासारन्ध्रेण देहे अपकर्षणं पूरकशब्देन, तस्य स्थिरता कुम्भकशब्देन एवञ्च निष्क्रान्तिः रेचकशब्देन ज्ञेयम्। रेचकपूरकसंयुक्तः सहितकुम्भकः, रेचकपूरकरहितः केवल कुम्भकश्च बोध्यः। अत्र जिज्ञास्यते सर्वैः रेचकपूरकराहित्यं कथं सम्भविष्यति, यतोहि रेचकानन्तरं किञ्चित्कालाय बहिर्कुम्भकः तथैव पूरकानन्तरं किञ्चित्कालाय अन्तःकुम्भकस्तु वयं कुर्मः। परञ्च केवलकुम्भके न रेचको न पूरकः। यदा प्राणवायुः यथास्थितिः सहसा पूरकरेचकं विना केवलमवरुद्ध्यते तदा केवलकुम्भकः सञ्जायते। प्रायोगिक परिपेक्षेणोक्त केवलकुम्भकीय सिद्धान्तस्योद्घाटनं स्पष्टावबोधाय नितान्तावश्यको वर्तते, परञ्च एतत्पूर्वं प्राणविषयकसामान्यावधारणायाः ज्ञानमपि आवश्यकं वर्तते। सामान्यतया शरीरे वायुः षण्णवत्यङ्गुलीमानं भवति। शरीराद्बहिर्गतो स्वयमेव द्वादशाङ्गुलिको जायते। गायने षोडशाङ्गुल्यो, भोजने विंशत्याङ्गुल्यो, गमनक्रियायां चतुर्विंशाङ्गुल्यो, निद्रायां त्रिंशदङ्गुल्यो, मैथुने षट्त्रिंशदङ्गुल्यो, व्यायामे तु सर्वाधिकश्च वायोर्बहिर्गतिः सम्पद्यते। यथा तु वायोः बहिर्गतिविषये आचार्यैः कथितम् -

***षण्णवत्यं गुलीमानं शरीरं कर्मरूपकम्।***
***देहाद्बहिर्गतो वायुः स्वभावो द्वादशांगुलिः।***
***गायने षोडशांगुल्यं भोजने विंशतिस्तथा।***
***चतुर्विंशांगुलिर्मार्गे निद्रायां त्रिंशदंगुलिः।***
***मैथुने षट्त्रिंशदुक्तं व्यायामे च ततोऽधिकम्॥***

प्राणानां बहिर्गतौ न्यूनत्वेन आयुः प्रवर्धते, आधिक्येनायुः क्षयः, अत्र पूरकरचकयोः अवधिदीर्घत्वमेव न्यूनत्वस्याभिप्रायो बोध्यः। यौगिकमुद्रादिप्रभावेन तस्मिन्शरीरे पूरकक्रमे रेचने वा अभ्यासाधिक्यत्वाद् दीर्घत्वं संजायते। तस्य कुम्भकावधिः दिनं दिनं प्रवर्धते। देहाग्निवर्धनात् क्षुत्पिपासायामक्रमिकस्थितिः दृश्यते। क्वचित्तु क्षुत्पिपासाया आधिक्यं भवति, क्वचित्तु आवश्यकताया अभावोऽनुभूयते। निद्रायामपि न्यूनत्वं संजायते। यदा योगी केवलकुम्भकेऽवस्थितो भवति यदा तस्यायुः क्षयक्रमोऽवरुध्यते।

# 'स्वविषयसंप्रयोगाभावे चित्तस्वरूपानुकार इवेति चित्तनिरोधे चित्तवत् निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते'

***घेरण्डसंहितायां सहितनिगर्भप्राणायामोल्लेखक्रमे -***
***उत्तमा विंशति मात्रा, षोडशी मध्यमा तथा।***
***अधमा द्वादशी मात्रा प्राणायामास्त्रिधामताः॥***

पूरककुम्भकरेचकक्रमेण 20/80/40 इति उत्तमा, 16/64/32 इति मध्यमा, 12/48/24 इति अधमा ज्ञेया। अस्तु, संख्याविषयकविभिन्नत्वादत्र अधिकारिभेदाः, पारम्परिकप्रक्रियाभेदाः, अनुभवभेदाश्च ज्ञेयाः। पूर्वोक्तसम्पूर्णविवेचनेनेदं तु स्पष्टो वर्तते यत् प्राणानां प्रमन्दतायामेव प्राणायामलक्ष्यप्राप्तिर्निहितेति। अनुपातेऽपि 1-4-2 क्रमो वर्तते एव। उक्तप्रयोगेनेत्थं किं भवति यत् यस्य प्रभावात् स्वयमेव केवलकुम्भकस्य स्थितिः सञ्जायते इति जिज्ञासा पूर्ववदेव? सरलतया संज्ञानाय त्वेत्थं कथयितुं शक्यते यत् शरीरशोधनानन्तरं प्राणापानयोर्मध्ये विभाजकानां समानप्राणाणां विभिन्नभ्रामर्यादि-यौगिकक्रियावशात् विभेदेन एकत्वं सञ्जायते, तस्यामवस्थायां इडापिंगलामार्गमभित्यज्य प्राणाः सुषुम्नामार्गे प्रविशन्ति प्रचलन्ति च। इदमेव मुख्यकारणं वर्त्तते केवलकुम्भकस्य। वैशिष्ट्यं प्रस्तूयते, मध्यमकुम्भके कनिष्ठकुम्भकस्य उद्घातद्वयं तथा च उत्तमकुम्भके कनिष्ठकुम्भकस्य उद्घातत्रयं भवति। अर्थात् 24 मात्रायाः मध्यमकुम्भके पूरकद्वयं रेचकद्वयञ्च न स्त अपितु मात्रैकैव पूरकरेचकेण कार्यसम्पन्नेति। तथैवोत्तमविषयेऽपि ज्ञेयम्। शनैः शनैः प्राणायामस्य अभ्यासप्रभावात् स्वयमेव कुम्भककालोऽपि अभिवर्धते। यदा द्वादशप्राणायामकाले केवलैकैव पूरकरेचको भवति तदा तस्याः अवस्थायाः संज्ञा प्रत्याहारेति। अर्थात् एकैव कुम्भको दीर्घकालपर्यन्तं भवति, फलतः मध्ये एकादशपूरकरेचकाः न भवन्ति अपितु मात्रैकैव पूरकरेचको वर्तते। अवस्थेयं केवलकुम्भकेति। निरूत्तरतन्त्रे प्राणायामादारभ्य समाधिपर्यन्तं विवेचनं प्राप्यते, तत्र शास्त्रकारैः कथितम् -

***प्राणायामो द्विषट्केन प्रत्याहारः प्रकीर्तितः।***
***प्रत्याहारो द्विषट्केन जायते धारणा शुभा॥***
***धारणाद्वादशप्रोक्तं ध्यानं ध्यानविशारदैः।***
***ध्यानं द्वादशकैरेव समाधिरभिधीयते।***
***यत् समाधौ परं ज्योतिरन्तरं विश्वतो मुखम्।7***

प्रस्तुतश्लोकैः ज्ञायते यत् द्वादशप्राणायामेन प्रत्याहारो, द्वादशप्रत्याहारेण धारणा, द्वादशधारणया ध्यानं, द्वादशध्यानेन समाधिश्च भवति। द्वादशप्राणायामे केवलैकैव पूरकरेचको वर्तते अत्र कुम्भकावधिः अष्टतो दशमिनटपर्यन्तं भवति। अत्र तु स्पष्टरूपेणेदं ज्ञेयम् विना वैराग्यमुमुक्षाभ्यां प्रस्तुतप्रयासो मात्रशारीरिकश्रमो दम्भरोगमृत्युहेतवेति। अग्रे द्वादशप्रत्याहाराणामेका धारणा भवति। तस्यां धारणायां एकैवकुम्भके 144 प्राणायामाणां क्षमता भवति। अर्थात् अस्यामवस्थायां केवलैकैव पूरकरेचको भवति शेष 143 पूरकरेचकाभावो ज्ञेयः। अत्र कुम्भकावधिः होराद्वयं भवति। एतावदेव कुम्भकसामर्थ्यं वर्धमान् ध्यानसमाधिपर्यन्तं भवति। ध्याने 24 होरा, समाधौ द्वादशदिनपर्यन्तं कुम्भको भवति। अस्यैव सिद्धान्तस्य संकेतरूपेण योगसूत्रकारैः स्वयमेव प्राणायाम वर्णने कृतम्। आचार्यैः तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः18 इत्यात्मकं सूत्रन्निगदितम्। सत्यासने श्वासप्रश्वासयोर्गतिविच्छेद उभयाभावः प्राणायाम इत्यर्थः। प्राणायामस्य पापक्षयात्मकावान्तरफलप्रतिपादानन्तरं मनसः स्थैर्यत्वमित्यात्मकमुख्यफलं प्रतिपादकसूत्रस्यावतरणं योगसूत्रकारैः कृतम् - धारणासु च योग्यता मनसः। 19 अयं प्राणायामः मनः स्थित्वा धारणाविषयकसामर्थ्यवान् करोति। द्वादशप्रत्याहाराणामेका धारणा भवति।

प्रत्याहारेऽपि किं भवति इत्यपि विचारणीयम्। स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः।20 इन्द्रियव्यापारः चित्तव्यापाराधीनः, यदा प्राणायामानुष्ठानेन चित्तव्यापारोऽवरुद्ध्यते तदा स्वयमेव इन्द्रियव्यापारोऽपि नश्यते। अस्यैव भावस्य प्रस्थापनं प्रत्याहारसूत्रस्य व्यासभाष्ये आचार्यैः कृतम्– 'स्वविषयसंप्रयोगाभावे चित्तस्वरूपानुकार इवेति चित्तनिरोधे चित्तवत् निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते।' अस्तु, विना खेचर्यादिमुद्रासहयोगेन केवलकुम्भकस्य प्रथमचरणेऽपि प्रवेष्टुं न शक्यते, केवलकुम्भकस्याभावे अन्तरङ्गे प्रवेशोऽसंभवेति। अतः कथयितुं शक्यते यत् मुद्रास्तथैव सन्ति यथा सरणि, यावत्पर्यन्तं दिव्यदेहात्मिका छदिर्न प्राप्यते तावत्पर्यन्तं मुद्राणामाश्रयोऽपेक्षते। प्राणायामानन्तरं मुद्राणां कथनं प्रायोगिकसैद्धान्तिकयोगग्रन्थयोर्मध्ये मतैक्यं सूच्यत इति।

# *'प्रधानं च षट्ष्वङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् '*

भाष्यते अनया या सा भाषा इति 'भाषा' शब्दस्य व्युत्पत्तिः। भूमण्डलेऽस्मिन् अविकृता प्राचीनतमा भाषा हि संस्कृतभाषा। जगति अस्मिन् भूषणस्वरूपा हि संस्कृतभाषा। सम्यक् कृतमिति विग्रहे सम्-पूर्वकात् कृ-धातोः क्त-प्रत्यये 'संपरिभ्यां करोतौ भूषणे'1 इति सुडागमे संस्कृतमिति। अतः संस्कृतं मनुष्यजनानां वाग्भूषणमेव। सर्वेषां संस्कृतभाषाशिक्षायां व्याकरणज्ञानस्य अतीव अपेक्षा वर्तते। षड्वेदाङ्गेष्वपि प्रधानं खलु व्याकरणम्। पतञ्जलिना उक्तम् - 'प्रधानं च षट्ष्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति।' व्याकरणज्ञानं विना शब्दानां प्रकृतिप्रत्ययादिज्ञानं न सम्भवति। 'व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृति-प्रत्ययादि-विभागेन शब्दा अनेन इति व्याकरणम्' इति व्याकरणशब्दस्य व्युत्पत्तिः।

सम्प्रति संस्कृत 'व्याकरणम्' इति नामश्रवणादेव अस्माभिः यद् व्याकरणमवगम्यते तत्तु पाणिनीयव्याकरणमेव। तथा हि व्याकरणग्रन्थः इति उच्यमाने आदौ एव अस्माकं मनसि यस्य ग्रन्थस्य चिन्ता समुदिता तत्तु महामुनेः पाणिनेः 'अष्टाध्यायी'ति। इदानीं समये प्रायः येषां व्याकरणशास्त्राणामधिकतया चर्चा क्रियते तानि सर्वाणि खलु पाणिनेः अष्टाध्याय्याश्रितान्येव। पाणिनीयव्याकरणस्य विकासे अस्माभिः प्रस्थानद्वयं दृश्यते - अष्टाध्यायीसूत्रक्रमानुसारं सूत्रप्रस्थानम्, संज्ञापरिभाषादिप्रकरणक्रमानुसारं प्रक्रियाप्रस्थानञ्चेति। तत्र प्रक्रियाप्रस्थाने कौमुदीप्रस्थानं सर्वोत्कृष्टम्। कौमुदीप्रस्थानेषु भट्टोजिदीक्षितस्य 'वैयाकरणसिद्धान्तकौमुदी' इति ग्रन्थः सर्वश्रेष्ठः। वैयाकरणानां मध्ये सिद्धान्तकौमुद्याः माहात्म्यविषये एकः श्लोकः प्रचलितोऽस्ति -

***कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।***
***कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः॥***

अत एव कौमुदीग्रन्थस्याध्ययनं सर्वेषां करणीयम्। भाषाज्ञानार्थं वाक्यस्य ज्ञानमपेक्षितम्। पुनश्च भाषायाः विश्लेषणार्थं कारकार्थज्ञानमपेक्षितम्, 'क्रियाजनकत्वं कारकत्वम्' इति। 'कारके' इति पाणिनीयसूत्रस्यार्थः एवं भवति - 'क्रियां करोति, सम्पादयति, निवर्तयति, निष्पादयति, जनयति इति कारकम्।' नैयायिकैः उक्तम्- 'क्रियान्वयित्वं कारकत्वम्'। अत्र तु मम अलोच्यविषयस्तावत् कारकप्रकरणस्थितेषु सूत्रेषु सम्प्रदानकारकस्य यथार्थस्वरूपविश्लेषणम्। 'सम्यक् प्रदीयते यस्मै' इति व्युत्पत्त्या सम्पूर्वकस्य दाधातोः शेषे सम्प्रदाने 'कृत्यल्युटो बहुलम्' इति सूत्रेण ल्युट्प्रत्यये सम्प्रदानशब्दो निष्पन्नः। सम्प्रदानमिति एका पाणिनीयसंज्ञा। टि-घु-इत्यादिवत् लघुसंज्ञा न। महत्याः संज्ञायाः फलं खलु अनुगतार्थलाभः। अत्र पाणिनिना सूत्रितं 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति। अस्य सूत्रस्य साधारणोऽर्थो हि - कर्ता कर्मणा सह यस्य सम्बन्धं कर्तुम् इच्छति तस्य सम्प्रदानसंज्ञा भवति। अत्र प्रश्नो भवति कर्मणा सह नाम कस्य कर्मणा सह? अत्रोच्यते महासंज्ञाकरणात् दानस्य कर्मणा इति अध्याहार्यम्। अत्र दीक्षितेनाप्युक्तं वैयाकरणसिद्धान्तकौमुद्याः कारकप्रकरणे वृत्तौ - 'दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञा स्यात्' इति। दानस्य कर्मणा इत्युक्ते 'अजां ग्रामं नयति' इत्युदाहरणे नयनक्रियायाः अजारूपकर्मणा सह सम्बन्धं कर्तुम् अभिप्रेतस्य ग्रामस्य न सम्प्रदानसंज्ञा। एवम् 'हस्तं निदधाति वृक्षे' इत्युदाहरणेऽपि वृक्षस्य न सम्प्रदानसंज्ञापत्तिः। वस्तुतः दानस्य अर्थो भवति - स्वस्वत्त्वनिवृत्तिपूर्वकपरस्वत्त्वोत्पत्तिः।

# अमृतवाणी गीतातत्वार्थ बोधः

*सुखदुःखसमत्वजीवनममृतोपमम्*
*सुखदुः खसमं यस्य*



शत्रुघ्नश्रीनिवासाचार्यः ( पंडित शंम्भुनाथ शास्त्री वेदान्ती ) भागलपुर ( बिहार )

*जितेन्द्रियस्ततःपरम्।*
*धैर्यवान्पुरुषःयोगी*
*अमृतं तस्य जीवितम्॥*
*पण्डित शम्भुनाथ शास्त्री*



**संस्कृतभाष्यम्-** यः जितेन्द्रियः कर्मयोगी धीरपुरुषः स्वकर्मणि धैर्येण तिष्ठति यः योगीपुरुषः सः कर्मयोगी धीरपुरुषः सुखदुः खयोः अनुकूल प्रतिकूल-परिस्थित्योः, समत्वमनुभूयते तं योगी पुरुषमिन्द्रयाणि न व्यथयन्तृि न व्याकुली कुर्वन्तीति भावः। यस्य पुरुषस्य एतादृशस्स्वभावः स्यात् तस्य अमृतोपमं जीवनं भवति स एव मोक्षस्याधिकारी चास्ति। भगवता श्रीकृष्णेनार्जुनं प्रति गीतायाः द्वितीयेऽध्याये एतदमृतो पमंवचनं भाषितम् यं हि न व्यथयन्त्येते

**पुरुषं पुरुषर्षभ, समदुःख सुखं धीरं**
**सोऽमृतत्वाय कल्पते। भगवद्गीता ॥**

**तत्वार्थः-** हे पुरुष श्रेष्ठअर्जुन! जो कर्मयोगी धीर पुरुष सुख और दुःख को समान रूप से देखकर तदनुरूप आचरण करते हैं,विषय और इन्द्रियों के संयोग से होने वाले सर्दी- गर्मी आदि मानव को व्यथित नहीं करते हैं , वह मोक्ष प्राप्ति के योग्य हैं। रहस्यात्मक तथ्य-- भगवान् श्रीकृष्ण अर्जुन को कर्मयोगी स्वरूप में देखना चाहते हैं ।अर्जुन को निमित्त कर अपने उपदेश के माध्यम से मनुष्य को कमऱ्योग की शिक्षा देने का उपक्रम प्रारम्भ कर रहे हैं। अपने उपदेश में उन्होंने अर्जुन से कहा है कि--हे पुरुषों में श्रेष्ठअर्जुन! जो इन्द्रिय और विषयों के संयोग से प्रारब्ध कर्म के अनुसार प्राप्त सुख में न तो हर्षित होता है और न ही दुःख में कष्ट का अनुभव करता है, अर्थात् जो सुख-दुःख दोनों को समान समझता है तथा जो धीर पुरुष वर्णाश्रम धर्म के अनुसार विहित युद्धादिपरक कर्मों का फलासक्ति त्यागपूर्वक मोक्ष का साधन समझकर पालन करता है, वह अवश्य ही अमृतत्व को प्राप्त करता है अर्थात् मोक्ष को प्राप्त करता है।

# 'धातोः कर्मणः समान कर्तृका दिच्छायां वा'

**यलोपविधिः।** यलोपविधिं प्रति अजादेशो न स्थानिवत्भवति। कण्डूतिः इत्युदाहरणम्। कण्डूशब्दात् 'कण्ड्वादिभ्यो यक्' इति यकि तदन्तात् 'स्त्रियां क्तिन्' इति क्तिनि अनुबन्धलोपे 'अतो लोपः' इति यकारलोपे 'लोपो व्योर्वलि' इति यकारलोपे कण्डूयति इति रूपं सिद्धम्। अतो अकारलोपस्य परनिमित्तत्त्वेन स्थनिवत्वात् 'लोपो व्योर्वलि' इति यकारलोपो न स्यात्। अतो यलोपविधिना स्थानिवन्निषेधात् यलोपो भवति।

**स्वरविधिः।** स्वरविधिं प्रति अजादेशो न भवति। चिकीर्षकः इत्युदाहरणम्। कृधातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सनि अभ्यासादिकर्मे ण्वुलि तत्स्थाने अकादेशे 'अतो लोपः' इति अकारलोपे चिकीर्षकः इति सिद्धम्। अत्र अकारलोपस्य परनिमित्तकत्त्वेन स्थनिवद्भावात् 'लिति प्रत्ययात् पूर्वमुदात्तम्' इति इकारस्य उदात्तत्वं न स्यात्। अतः स्वरविधिना स्थानिवत्त्वनिषेधादत्र उदात्तत्वं भवति।

**सवर्णविधिः।** सवर्णविधिं प्रति अजादेशो न स्थानिवत्भवति। शिन्ति इत्युदाहरणम्। शिषेः लोटि मध्यमपुरुषैकवचनविवक्षायां 'रूधादिभ्यः श्नम्' इति श्नमि सिपः हिकारे हिकारस्य धिकारे ष्टुत्वे जशत्वे 'श्नसोरल्लोपः' इति अकारलोपे नकारस्य अनुस्वारे 'अनुस्वारस्य ययि परस्ववर्णः' इति परस्ववर्णे शिन्ति इति सिद्धम्। अत्राकारलोपस्य परनिमित्तकत्त्वेन स्थानिवत्त्वात् सवर्णविधिः न स्यात्। अतः सवर्णविधिना स्थानिवत् निषिध्यते।

# गीताज्ञान तत्व सुधा संचरण



**डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः, अध्यक्ष, गीताज्ञान संचरण समितिः, पटना, विहारः**

*मय्यासक्तमना*

धन्यो कृष्णः धन्या गीता॥धन्याः धन्याः यैः यैः पीता॥धन्या धन्या गीता माता। जयतु जयतु गीता माता। गीतायाः पदमेकमपि सर्वत्र सर्वतः समुद्धारकं॥गीताज्ञानं समाश्रय॥ भगवान् कृष्णः कथयति यत्, यः मय्यासक्तमना भविष्यति स एव समग्रं मां ज्ञास्यसि॥ भगवद् बोधः एव सर्वज्ञानसार्थक्यं। मय्यासक्तमना इत्यस्य को भावः? मयि एव आसक्तं मनः यस्य स मय्यासक्तमना॥कस्यापि भक्तस्य मनः सर्वथा सर्वांशतः कृष्णे यदा लीनं भवति स एव कृष्णं ज्ञातुं द्रष्टुं बोद्धुं समर्थो भविष्यति॥मानव जीवनस्य सार्थक्यमिदमेव॥ परं मानवः चिन्तयति यत् यदाहं कृष्णे लीनो भविष्यामि तदा भौतिक जीवनसंचालनाय साधनं कुतः समायास्यति?केन प्रकारेण जीवनयापनं भविष्यति? एतस्य कारणं विद्यते यत् भगवति न विश्वासः जीवस्य॥ परं विचार्यतां कश्चिद् पारिश्रमिकः कस्यचिद् स्वामिनः पार्श्वे पारिश्रमिकाय गतवान्। तं स्वामी अकथयत् त्वं तिष्ठ यदा कार्यं भविष्यति तथा बोधयिष्यामि। सायंकालं यावत् स्वामिनः पार्श्वे न किञ्चित् कार्यं समागमत्। सायंकाले भृत्यः स्वामिनं कथयति मह्यं पारिश्रमिकं ददातु, स्वामी वदति त्वन्तु कार्यं न कृतवान्।तथा पारिश्रमिकः वदति अद्याहं यावद् दिनं भवते एव उपाविशम्।तर्हि मह्यं उपवेशनपारिश्रमिकं देहि। तथा स्वामी पारिश्रमिकं तस्मै प्रदत्तवान्। संसारे यदि उपवेशनपारिश्रमकः मिलति चेद् तर्हि कृष्णोऽपि नूनं मह्यं दास्यति॥ इत्थं विश्वासः कर्तव्यः।





**प्रयागराजस्य संगमे नमामि गंगे कार्यक्रमस्य तत्वावधाने गंगा नद्याः जले मत्स्यान् प्रक्षिपन्तः जनाः।**



छायाकारः सौरभ कुमार

# 'लः कर्म्मणि च भावे चाऽकर्म्मकेभ्यः'

तत्र तावद् दीक्षितादयः मण्डनमिश्रानुयायिनः धातोः फलमात्रमर्थः, व्यापारश्च प्रत्ययार्थः इति स्वीकुर्वन्ति। एवञ्च नैयायिकानां नये फलव्यापारौ धातोः अर्थौ स्तः। लडादिलकाराणाञ्च कृतिः नाम यत्नोर्थः मन्यन्ते, लघवात्। तथा च धातौ फलनिरूपिता शक्तिः पृथक्, व्यापारनिरूपिता शक्तिश्च पृथक् इति धातोः पृथक्शक्तिम् अर्थात् फलांशे एका शक्तिः, व्यापारांशे च एका शक्तिरिति शक्तिद्वयम्, ताभ्यां शक्तिभ्याञ्च फलस्य व्यापारस्य चाऽर्थस्य पृथगुपस्थितिरिति1 प्राचीनशाब्दिकाः स्वीकुर्वन्ति। नागेशश्च पृथक् शक्तिं दोषप्रदर्शनपूर्वकं निरस्य विशिष्टेऽर्थे शक्तिमर्थात् फलावच्छिन्ने व्यापारेऽर्थात् फलविशिष्टव्यापारे, व्यापारावच्छिन्ने फलेऽर्थात् व्यापारविशिष्टफले च धातुशक्तिं स्वीकरोति। एवञ्च धातौ पृथक्शक्तिवादिनः दीक्षितादयः, विशिष्टशक्तिवादिनश्च नागेशभट्टाः इति बोध्यम्।

(क) मण्डनमिश्रमतम्, तत्खण्डनञ्च - मण्डनमिश्रमते तु धातोः फलमात्रमर्थः, व्यापारश्च प्रत्ययार्थः इति स्वीकुर्वन्ति। मीमांसकमतखण्डनाऽवसरे नागेशेन चतुर्दश आपत्तयः प्रदर्शिताः -

1. सूत्रविरोधापत्तिः - 'लः कर्म्मणि च भावे चाऽकर्म्मकेभ्यः'2 इत्यनेन सूत्रेण कर्त्तरि कर्म्मणि च लकाराः विधीयन्ते। तस्मात् कर्त्तृकर्म्मणोः एव प्रत्ययार्थता लभ्यते, व्यापारस्य प्रत्ययार्थत्वे तु सूत्रेणाऽनेन विरोधः स्यात्।

2. अनेकप्रत्ययेषु शक्तिकल्पनमिति गौरवापत्तिः - पचति, पक्ष्यति इत्यत्र तिङः, पक्ववान् इत्यत्र कृतः फूत्कारादि-व्यापारबोधायाऽनेकप्रत्ययानां शक्तिस्वीकारापेक्षया तिङन्तकृदन्तप्रयोगे वर्त्तमानस्यैकस्य धातोरेव शक्तिकल्पनायां लाघवं स्यात्।

3. कारणान्तरकल्पनमिति गौरवापत्तिः - 'पचति' इति प्रयोगे तिङा फूत्कारादिप्रतीतिः, तथा 'गच्छती'त्यादावपि तादृशस्यैव तिङः सत्त्वात् फूत्कारप्रतीत्यापत्तिः स्यात् । तद्वारणाय मीमांसकमते फूत्कारप्रतीतये पृथक्तया पचिसमभिव्याहारस्याऽपि कारणत्वं कल्प्यमिति कारणान्तरकल्पनया गौरवापत्तिः स्यात्। कार्य्यकारणभावस्वरूपन्तु - 'आख्यातार्थफूत्कारविषयकशाब्दबोधं प्रति पच्धातुसमभिव्याहृत-तिङ्पदजन्योपस्थितिः कारणमि'ति । एवमेव अनेकविधव्यापारविषयकशाब्दबोधं प्रति तत्तद्धातुसमभिव्याहारस्य कारणत्वकल्पने महद् गौरवं स्यात्।

4. सकर्म्मकादिव्यवहारोच्छेदापत्तिः - 'धात्वर्थव्यापारव्यधिकरणफलवाचकत्वं सकर्म्मकत्वम्'3, 'धात्वर्थव्यापारसमानाधिकरणफलवाचकत्वमकर्म्मकत्वमि4'ति व्याकरणशास्त्रे सकर्म्मकाऽकर्म्मकव्यवहारः प्रत्ययार्थव्यापारत्वे नोपपद्येत। यदि 'प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्म्मकत्वम्, 'प्रत्ययार्थव्यापारसमानाधिकरणफलवाचकत्वमकर्म्मकत्वमि6'ति स्वीकारे सकर्म्म-काऽकर्म्मकव्यवहारसम्भवः, अपि च, 'प्रत्ययार्थव्यापाराश्रयत्वं कर्त्तृत्वमि6'ति स्वीकारे 'घटं भावयति' इत्यत्र णिच्प्रत्ययार्थप्रेषणादिव्यापाराश्रयः देवदत्तः, न तु घटः अचेतनत्वात्, तर्हि घटस्य कर्त्तृत्वाभावात् 'गतिबुद्धि.' इति सूत्रेण कर्त्तरि विधीयमानं कर्म्मत्वं न स्यादिति न दोषः। घटस्य णिच्प्रत्ययार्थप्रयोजकव्यापाराधिकरणदेवदत्तभिन्नघटरूपाधिकरणे विद्यमानोत्पत्तिरूपफलस्याऽऽश्रयत्वेन घटादेः 'कर्त्तुरीप्सिततमं कर्म्म'9 इत्यनेन कर्म्मत्वं सुलभम्। परमेवं कर्म्मत्वे स्वीकृते पाचयति देवदत्तो यज्ञदत्तेन इत्यत्राऽपि यज्ञदत्तस्य कर्म्मत्वं स्यात्। तेन कर्त्तरि तृतीयाऽनापत्तिः।

5. अभिधानादिव्यवस्थोच्छेदापत्तिः - अस्मन्मते प्रत्ययार्थः कर्त्ता, कर्म्म स्वीक्रियते, तदा तिङा क्वचित् कर्त्तुः, क्वचित् कर्म्मणः अभिधाने सति उक्ते कर्त्तरि प्रथमा,10 अनुक्ते च तृतीया,11 एवमेव उक्ते कर्म्मणि प्रथमा, अनुक्ते च द्वितीया इत्याद्यभिधानाऽभिधानव्यवस्थोत्पद्यते। परं मीमांसकनये व्यापारस्य प्रत्ययार्थत्वे तु तेन व्यापारस्यैवाऽभिधानात्, कर्त्तृकर्म्मणोरभावात्, प्रथमाद्वितीयादिविधानव्यवस्थायाः उच्छेदः स्यात्।

6. यास्कवचोविरोधापत्तिः - यदि चाऽत्र मीमांसका ब्रवीरन् - कर्त्तृप्रत्यये व्यापारेण स्वोपपादकस्य आश्रयस्याऽक्षेपात् कर्त्तुरभिधानम्, कर्म्मप्रत्यये च प्रधानेन फलेन स्वाश्रयाक्षेपात् कर्म्मणोऽभिधानमिति न अभिधानव्यवस्थोच्छेदापत्तिरिति, तर्हि अपरो दोषः प्रवर्त्तते। तथाह्याक्षिप्तायाः व्यक्तेः शाब्दबोधे प्राधान्यं स्वीक्रियते यथा जातिशक्तिवादे, तथैव प्रत्ययार्थव्यापाराक्षिप्तस्य कर्त्तुः फलाक्षिप्तकर्म्मणश्च प्राधान्यं शाब्दबोधेऽऽपद्येत, ततश्च 'क्रियाप्रधानमाख्यातम्' इति यास्कवचनाद् विरोधापत्तिः स्यात्।

7. सूत्रवैयर्थ्यापत्तिः - अपि च, धातुना फलस्य बोधात्, फलाश्रयस्य कर्म्मणश्चाऽऽक्षेपेणैव बोधात्, कर्म्मणो बोधस्य 'लः कर्म्मणि'12 इत्यनेन कर्म्मणि लकारविधानवैय्यर्थं स्यात्, कर्म्मबोधस्याऽन्यथासिद्धत्वात्।

8. कारकभावनोभयवाचकत्वमिति गौरवापत्तिः - धातोः व्यापारार्थाभावे पक्वः, पाचकः इत्यादौ कर्म्मकर्त्तृकारकस्य व्यापारस्य च प्रतीतये कर्म्मार्थककृतां कर्त्रर्थककृताञ्च कारकभावनोभयवाचकत्वं मीमांसकेनाऽङ्गीकरणीयम्, येन गौरवापत्तिः स्यात्।

9. 'ग्रामो गमनवानि'त्यापत्तिः - यदि 'पक्वः, पाचकः' इत्यादौ व्यापारस्याऽऽक्षेपाद् बोध इति मीमांसकैः उच्येत येनोभयवाचकत्वरूपगौरवं न स्यादिति, तर्हि भावे विहितानां घञादिप्रत्ययानां व्यापारावाचकत्वे धात्वर्थफलमात्रवाचकत्वे च भावल्युडन्तस्य 'गमन' पदस्य धात्वर्थसंयोगमात्रवाचकत्वात् ग्रामस्य च संयोगवत्त्वात् 'ग्रामो गमनवान्' इति प्रयोगापत्तिः स्यात्।

10. कर्त्तुरभिधानापत्तिः - यदि च भावविहितस्य ल्युड्घञादेः व्यापारवाचकत्वं स्वीक्रियते, तदा 'पचति देवदत्त' इत्यादौ तिङ्वाच्यव्यापारेण स्वाश्रयस्य कर्त्तुराक्षेपादभिधानवत् 'देवदत्तस्य गमनम्' इत्यादावपि भावविहितल्युडादिवाच्यव्यापारेण स्वाश्रयस्य कर्त्तुराक्षेपात् सति कर्त्तुरभिधाने देवदत्तस्येत्यत्र प्रथमापत्तिः स्यात्।

11. 'शिष्याभ्यामि'ति द्विवचनापत्तिः - 'गुरुः शिष्याभ्यां पाचयती'त्यत्र 'हेतुमति च'13 इति सूत्रानुरोधेन णिजर्थः प्रयोजकव्यापारः, तिङर्थस्तु शेषः प्रयोज्यव्यापारो मीमांसकेन स्वीकर्त्तव्यः। एवञ्चोक्तवाक्ये तिप्प्रत्ययार्थस्यैकत्वसङ्ख्यायाः स्ववाचकाख्यातार्थव्यापारेऽन्वयिन्येवाऽन्वयात् अर्थात् एकत्ववाचकतिप्प्रत्ययार्थप्रयोज्यव्यापारे अन्वयिनि प्रयोज्यकर्त्तरि एवाऽन्वयात् 'शिष्याभ्यामि'त्यत्र द्विवचनस्याऽनापत्तिः स्यात् ।



**प्रयागराज/ वाराणसी।** अयमस्ति 'आचार्यः श्यामजी उपाध्यायः,यः भारतदेशे केवलमेक एवायमस्ति गत 41वर्षात् संस्कृतनैव वादनिर्माणं कृत्वा वादं करोति। सम्प्रति 60 पुस्तकानि लिखितान्येतेन महोदयेन। काश्याः गौरवोऽयं श्यामजी उपाध्यायवर्यः।

**जयतु विश्वनाथः। जयतु काशी।**
**वदतु क्ष्संस्कृतम्। जयतु भारतम्**

## 'ब्राह्मणनेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'

शिष्यतेऽनेनेति शास्धातोः 'सर्वधातुभ्यष्ट्रन्' इति ष्ट्रनि निष्पन्नः शास्त्रशब्दो निदेशार्थकस्य ग्रन्थरूपस्य वा वाचकः। तच्च शास्त्रं मनुजनूनां सन्मार्गनिर्देशकम्। जगत्यस्मिन् उपलब्धेषु बहुविधेषु शास्त्रेषु वेदशास्त्रं हि अन्यतमं सर्वविधज्ञानप्रतिपादितत्वात्। वेद्यतेऽनेनेति ज्ञानार्थकाद् विद्धातोरचि वेदशब्दो निष्पन्नः। स चोपचाराद् ग्रन्थशब्दस्यापि वाचको भवति। वेदार्थानुशीलनेन ज्ञायते यद् वेदा हि विविधज्ञानविज्ञानराशयः संस्कृतेराधाररूपाः कर्तव्याकर्तव्यबोधकाः शुभाशुभनिर्देशकाः विश्वहितसम्पादिकाः चतुर्वर्गावाप्ति-सोपानस्वरूपाश्च सन्ति। अतएव अखिलज्ञानराशिर्हि वेदः इति वक्तुं शक्यते। तस्मात् शास्त्रेषु अध्ययनविधिरेव विधीयते। विषयेऽस्मिन् महाभाष्यकारस्य भाष्यवचनमनुसन्धेयम् - 'ब्राह्मणनेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति। अतएव वेदानां साधुज्ञानार्थं षण्णां वेदानां ज्ञानमावश्यकम्। यद्यप्यद्यत्वे कातन्त्रमुग्धबोधसारस्वताभिधानानि विविधानि व्याकरणान्युपलभ्यन्ते तथापि सर्वेषां न वेदाङ्गत्वम्। निखिललौकिकशब्दानां व्युत्पादकतया पानिणीयव्याकरणमेव सर्वेषां मूर्धन्यं धन्यं च सद् वेदाङ्गतामाधत्ते। तच्च पाणिनीयं शास्त्रं सूत्रजालावद्धम्। अर्थान् सूते सूचयति वेति सूत्रमिति। पाणिनीये शब्दशास्त्रे - संज्ञा च परिभाषा च विधिर्नियम एव च।

**-क्रमशः**

# स्त्रीवशीकरणम्

## ( हास्यम् )

अथैकदा प्रेमिकाचार्यः प्रवचनार्थं मायानगरीं प्रत्यायातः । तत्रस्थजनाः तं सबहुमानं गीतवाद्यादिभिः स्वागतं पूजनं च कृतवन्तः । कियत्कालं पर्यन्तं तत्र चायपानादि सत्कारः प्रचलितः। तदानीं गुरुणा सह पञ्चपार्श्वचरा शिष्या आसन् । सभामण्डपे प्रवचनारम्भे कश्चनो जनः नाम्ना सुशीलः परमाचार्यमुपेत्य पृष्टवान् । भगवन् ! कृपया मह्यं स्त्रीवशीकरणोपायं कथयतु। सर्वदा आवयोः पति-पत्न्योर्मध्ये विवादो जायते । कदापि अस्माकं गृहे शान्तिर्नास्ति । एतच्छ्रुत्वा आचार्यो व्रूते , तन्हि श्रूयतां मद्वचनं । इतः पूर्वं मया सहस्राधिका एतावती समस्या चुटकी मात्रेण संसाधिता । रसिकभाष्येण सह विशदयामि तत्प्रेमसूत्रम् । 'अथ स्त्रीवशीकरणं व्याख्यासामः 'इति प्रथमं सूत्रम्।1। रसिकभाष्यम् 0- अथ पद आरम्भार्थः । सम्मानार्थश्च । उभयथा वृत्तिः । स्त्रीः स्वभार्य्यी । तस्याः अभिमतोपायः स्वीकर्तव्यः । व्यवहारे सामाजिकसंस्थाने । ननु भारतेषु पत्नी तु पतेः आज्ञाकारिणी । तत्कथं तामनु गमनमितिचेन्नैषो दोषः । गाणतान्त्रिके राष्ट्रे तथा प्रचलति । अन्यथा दोषापत्तिः । दण्डो ग्रहणीयः ।

### 2-कुलशीलरूपयौवनं प्रशंसनीयम् ।

प्रे0भा- नीचकुलस्य भवतु वा दुःशीला भवतु, कुरूपा भवतु वा गतयौवना भवतु सा भार्य्यी, सर्वदा तस्याः प्रशंसा कर्मणा वाचा कर्त्तव्या । तत्पदानुसरणं कर्तव्यम् ।

### 3-श्वशुरालयः प्रशंसनीयः ।

प्रे0भा0- सर्वदा श्वशुरगृहस्य आज्ञा पालनीया । आत्मानं किंकरो मन्यमानः तत्र सकलं कार्यं करणीयम् । स्वस्य धनं मास्तु, ऋणं कृत्वा श्यालिका- श्यालकयोः विवाहे पर्याप्तमुपढौकनं प्रदेयम् ।

### 4-स्वर्णालंकारादि प्रदेयम् ।

प्रे0भा0- 'धनतेरस' दिवसे सुवर्णालंकाराणि, सावित्री अमावास्यायां नवीन शाटिकां, रजःपर्वणि सुवासितताम्बुलम्, आदिपदेन उद्वर्तनादि नाना प्रसाधनानि सामग्र्याणि अवश्यमेव तस्यै दातव्यानि ।

### 5-परनारीनिन्दनम् ।

प्रे0भा0- कदापि परनार्य्यः रूप-गुण-प्रशंसादयः पत्नीं निकषा न प्रकाश्याः । सर्वदा अन्यासां नारीणामप्रतिष्ठा तस्मिन् गातव्या । कदाचित् तासां साक्षात्कारोपि गोपनीयः कर्तव्यः ।

### 6- धनं प्रदेयम् ।

प्रे0भा0- मासिकं वेतनं तस्यै प्रदातव्यम् । सा दात्री । त्वं ग्रहीता । कार्पण्य भावेन तस्याः अत्यावश्यकानि रूप्यकाणि नेतव्यानि ।

### 7- सर्वोच्च कर्त्री ।

प्रे0भा0- परिवारस्य नियन्त्रिकास्ति भार्या । तद्वचनं निगमः । तस्याः स्वतन्त्र कार्यधारायां त्वया न हस्तक्षेपः कर्तव्यः ।

### 8-अस्वादुः प्रशंसनम् ।

प्रे0भा0- सिद्धमसिद्धं,अत्यम्लं लवणं, अतितीक्ष्णम्, आर्धज्वलितं, स्वादुर्वा अस्वादुर्भवतु, सिद्धान्नं भवतु वा यवागुः, सर्वदा अतीव मधुरं मधुरमिति भणित्वा निर्द्वन्देन सारल्येन भोक्तव्यम् । एतदर्थं कदाचिदपि कटुभाषा न करणीया ।

### 9-सेवा कर्तव्या ।

प्रे0भा0- तस्याः दिनचर्यायां हस्तौ प्रसारणीयौ । वर्तनमार्जनवेलायां, वस्त्रधौत समये, गृहप्रोञ्छनावसरे ,रन्धनादिसमयेपि तस्याः सहायता कर्तव्या । रात्रौ तस्याः पादमर्दनमपि स्वास्थ्यप्रदमुच्यते ।

### 10-अन्यथा मारकदशा ।

प्रे0भा0- यदि शान्तिः काम्यते तर्हि दश सूत्राणि पठनीयानि श्रवणीयानि । मननीयानि निदिध्यासनानि चेति सर्वसाधारणानि प्रेमसूत्राणि रावणोक्तानि सन्ति। सूत्रमागी सेव्यः । अन्यथा पारिवारिकसंघर्षरूपा विपत्तिर्जायते । इयं मारकी । वंशनाशसपक्षा । श्रूयते स्त्रीकारणादेव महाभारतं नाम प्रसिद्धं युद्धमभवत् । रामायणस्य मूलेपि तदेव कारणम् । मनुष्यस्य व्यक्तिगतजीवने स्त्रीणां भूमिका महत्त्वपूर्णा । नमस्कृत्य सुशीलः कृतकृत्यो भूत्वा आत्मानं बहुमन्यमानः स्वगृहं जगाम । तथापरेद्युः स सुखी अभवत् ।

**नन्दप्रदीप्तकुमारः**



## रम्या रामायणी कथा




**श्रीराम चन्द्रचरणौ मनसा स्मरामि श्रीराम**
**चंद्रचरणौ वचसा गृणामि।**
**श्रीराम चन्द्रचरणौ शिरसा नमामि श्रीराम**
**चन्द्रचरणौ शरणं प्रपद्ये॥**

श्रीरामकथावैशिष्ट्यं वर्तते यत् तत्र स्थले स्थले मानवीयसद्गुणान् सम्वर्धनं कर्तारः सद्गुणाः शोभन्ते। यदि वयं सर्वे भारतीयाः समये समये श्रीरामकथामध्ययनं करिष्यामः, तन्हि तत्सुप्रभावः परिवारे समाजे च भविष्यति । श्रीरामकथा जीवनस्य गतिं मतिं च सुमार्गं प्रति प्रेरयतीति मन्ये।श्रीराम कथासिद्धान्ताः सर्वत्र मानवीयसंवेदनां प्रकाश्यन्ति। बहुशोभना शिक्षा वर्तते, यदा मन्थरायाः दुष्प्रेरणया कैकेयी पुरा महाराजदशरथेन दत्तस्य वरस्य दुरुपयोगमकरोत् । श्रीरामस्य वनगमनाय भरतस्य राज्याभिषेकाय च आग्रहं कृतवती । पितृभक्तः मर्यादापुरुषोत्तमः श्रीराममः सन्तोषेण वनं गन्तुम् उद्युक्तः । महाराजदशरथः तस्य प्रतिरोधमकरोत् । परं श्रीरामः पित्रा दत्तस्य वचनस्य भङ्गः न स्यादिति हेतोः चतुर्दशवर्षाणां वनवासार्थं वनं गतवान् । भगवती सीता लक्ष्मणश्च तमनुसृतवन्तौ । जगति एतादृशमुदाहरणं नैव दृश्यते यद्भ्राता भ्रातुः कृते वनं गतः। एषा वार्ता भगवद्भक्तिभूषणश्रीभरतमहाभागेन न गृहं प्रत्यागते सति श्रुता, तदा सः श्रीरामं प्रत्यानेतुमुद्यतः बभूव । भरतेन बहू आग्रहः रामाय कृतः, परं वचनपरिपालकः आज्ञाधारकश्च श्रीरामः भरतस्य वचनं न स्वीकरोति । तदा भरतः रामस्य पादुकां गृहीत्वा एव प्रत्यागच्छति श्रीरामः परिवा-रजनानां प्रत्यागमनकारणात्ततो दूरं गतः। एतादृश आदर्शः केवलं रामायणे एव वर्णितः। वयं सर्वे धन्याः सन्ति, अत एव श्रीरामचरित्रं श्रुत्वा ज्ञात्वा च स्वजीवनमपि तथैवानुसारं कर्तुं प्रयत्नशीलाः भवेदिति निवेदये।



आचार्य अरविंद पांडेय

**-क्रमशः**

## जय जगन्नाथ



निरुपममन्दिर-शोभित हे मधुकैटभमर्दन यज्ञपते
खलजनमर्दन शिष्टसभाजन हेमविभूषण मिष्टयते ।
रथपथमज्जन गौरववर्धन भक्तिरसायन धारक हे
जय जय हे मधुसूदन सज्जन सत्यसनातन मोहन हे

**नन्दप्रदीप्तकुमारः**

## 'रजकस्य वस्त्रं ददाति'

'विप्राय गां ददाति' इत्यत्र देवदत्तादिकर्तृणां पूर्वं गोः उपरि स्वस्वत्वम् आसीत्। परन्तु तस्य निवृत्तौ सत्यां विप्रस्य स्वत्वं जायते तद्गोः उपरि। विप्रं प्रति दानात् परं देवदत्तस्य नाम दानकर्तुः कोऽपि अधिकारः न स्यात्। अतः यत्र स्वकीयस्वत्त्वस्य निवृत्तिः न बुध्यते तत्र न सम्प्रदानसंज्ञा। यथा - 'रजकस्य वस्त्रं ददाति' इति। अस्मिन् स्थले रजकं प्रति यद्वस्तु दीयते तत्खलु पुनः ग्रहणार्थमेव। यद्वस्त्रं देयं वर्तते तस्य स्वत्त्वनिवृत्तिः न भवति। किञ्च, रजकस्यापि तस्मिन् वस्त्रे स्वकीयस्वत्त्वं न जायते। अतः न चतुर्थी। प्रश्नो भवति स्वस्वत्त्व निवृत्ति पूर्वक परस्वत्त्वोत्पत्तिः एव दानस्यार्थः - इत्युक्ते 'रजकस्य वस्त्रं ददाति' इत्यत्र दा-धातोः प्रयोगः अनुचितः। परन्तु कथं क्रियते? अत्र दाधातोरर्थः गौणः। यत्र स्वस्वत्त्वनिवृत्तिपूर्वकपरसत्त्वोत्पत्तिः बोध्यते तत्र दाधातोः अर्थः मुख्यः, यत्र तन्न बोध्यते तत्र गौणः इति। एतादृशं मतं वृत्तिकारस्य। भाष्यकारेण पतञ्जलिना तु सम्प्रदानस्य अन्वर्थत्त्वं न स्वीकृतम्। कारणं तेन 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इति वाक्यस्य व्यवहारः कृतः वृद्धिसंज्ञायाः सूत्रे। चपेटादानम् इत्यत्र स्वस्वत्त्व निवृत्तिस्तथा परस्वत्त्वोत्पत्तिः न बोध्यते। शिष्यं प्रति चपेटादानं नाम करतलेन आघातकरणम्।

# रथयात्रा



नवदिनात्मिका रथयात्रा भारतवर्षस्य विशिष्टं पर्व । आषाढ-शुक्ल- द्वितीयायां तिथौ इयं घोषयात्रा भवति । अस्याः रथयात्रायाः दाण्डयात्रा-घोषयात्रा- श्रीगुण्डिचा यात्रा इति बहूनि नामान्तराणि श्रूयन्ते । इयं रथयात्रा विश्वप्रसिद्धा । नकेवलं भारते अपितु नैकेषु देशेषु सं-प्रति रथयात्रा प्रचलति । घोषयात्रा सर्वेषामुत्कलीयानां कृते परमादरणिया चरमा परमा च । यदुक्तं-

जगन्नाथप्रेम्णा सकलजनता भक्तसदयाः
रथारूढं दृष्ट्वा मधुरमधुवर्षासजलिताः ।
वदन्ति हे कृष्ण त्वमसि परमानन्दविषय-
स्तवेयं श्रीक्षेत्रे विमलरथयात्रा विलसतु ? इति ।

अस्मिन् पर्वणि बलभद्र-सुभद्रा- जगन्नाथ सहिताः त्रिमूतर्त्यः श्रीमन्दिरगन्तुं निषिद्धेभ्यः दर्शनविहीनेभ्यः अवहेलितेभ्यः अस्पृश्य-दलित-भक्तेभ्यश्च साक्षात् दर्शनदातुं श्रीमन्दिरात् वहिरागत्य क्रमशः तालध्वज- देवदलन- नन्दिघोष रथेषु उपविष्टाः सन्तः गुण्डिचामन्दिरं यावत् गच्छन्ति । तथयात्रादिवसे रथप्रतिष्ठा भवति । पश्चात् गजपतिना महाराजेन स्वर्णसमार्जन्या रथपरिष्करणं (छेरापहरा) क्रियते । ततः राघवदासमठपक्षतप्रदत्तं टाहिआं (पुष्पमुकुटं) परिधाप्य बलभद्र-सुभद्रा-जगन्नाथाः पहण्डि-क्रमेण रथारूढाः भवन्ति । भक्ताः रज्जुं धृत्वा रथाकर्षणं कुर्वन्ति । बडदाण्डे कमशः रथारूढानां देवानां गुण्डिचामन्दिरं प्रति गमनं चित्ताकर्षकम् । तद्दर्शनमपि बहु पुण्यप्रदम् । तदानीं दारुविग्रहाः राजराजेश्वरवत् प्रतीयन्ते । तदानीं देवाधिदेवस्य जगन्नाथस्य दर्शनमनिर्वचनीयमुक्तम् । यच्चोक्तं श्रीक्षेत्रसुधानिधौ-

**शृंगारे सूत्रधारः**

कनकमयनिभो राजराजाधिराजो
भक्तानां दारुब्रह्म त्रिभुवनमोहितो गुण्डिचायां पुरोधा ।
घोषाख्या दाण्डयात्रा परमसुललिता कारिता यन लीला
पूर्णा दिव्यावतारो जयतु सुरपुरीनायको देवराजः ?

अपि च- रज्जुं धृत्वा करौ सम्यक् रथमाकृष्य सादरम् । रथे तु वामनं दृष्ट्वा पुनर्जन्म न विद्यते ? इति । तदानीं सर्वे देवाः गुण्डिचा मन्दिरे निवसन्ति । तत्र श्रीमन्दिरवत् नीतिकान्तिः प्रचलति । नवमीपर्यन्तं तत्र स्थित्वा पुनः दशम्यां श्रीमन्दिरं प्रत्यागच्छन्ति । इदं प्रत्यावर्तनं बाहुडायात्रा इति कथ्यते । गुण्डिचामन्दि-रम् आडपमण्डपः जन्मवेदी वा उच्यते । अस्यां जन्मवेद्यां दारु-विग्रहाणां दर्शनमलौकीकं सर्वपापहरा-मित्युच्यते । एकादश्यां श्रीमन्दिरसम्मुखे देवानां विश्वप्रसिद्धः स्वर्णवेशो जायते । तस्मिन् समये त्रयो विग्रहाः बहुविधानि स्वर्णरौपादीनि अलंकाराणि विधारयन्ति । आषाढ शुक्लैकादश्या, कार्तिक-पौर्णमास्यां, पौष-पूर्णिमायां,फाल्गुन पूर्णिमायामेवम् आश्विन-शुक्लदशम्यां च वर्षस्य पञ्चकृत्वः एव स्वर्णवेशो जायते। पुर्य्यां श्रीमन्दिरेऽस्मिन् क्वचिदपि मनसि स्वर्णवेशो रथेषु दाण्डे श्रीगुण्डिचाख्या विलसति परमा घोषयात्रा त्वदीया । सम्भ्रान्तं दिव्यदृश्यं सकलशुभकरं गुण्डिचामण्डपस्थं स्मारं स्मारं त्वदीयां सुविमलधवलां कीर्तिलीलां भजामि ? जय जगन्नाथ ।

**डः नन्दप्रदीप्तकुमारः**

**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्श्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
-एसो. **प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**

**वैधानिक सूचनाः** आह्निक वार्ता पत्रम् से सम्बन्धित समस्त विवाद के निपटारे का क्षेत्र इलाहाबाद (प्रयागराज) न्यायालय होगा।